९४७ ॐ षोडशाधारनिलयाय०
९४८ ,, षोडशस्वरमातृकाय०
९४९ ,, षोडशान्तपदावासाय नमः
९५० ,, षोडशेन्दुकलात्मकाय०
९५१ ,, कलासप्तदशीसप्तदशाय नमः
९५२ ,, सप्तदशाक्षराय नमः
९५३ ,, अष्टादशद्वीपपतये०
९५४ ,, अष्टादशपुराणकृते०
९५५ ,, अष्टादशौषधिसृष्टये०
९५६ ,, अष्टादशविधिस्मृताय०
९५७ ,, अष्टादशलिपिकृतये०
९५८ ,, अष्टादशविजातिकृते०
९५९ ,, एकविंशपुंसे नमः
९६० ,, एकविंशत्यङ्गुलिपल्लवाय नमः
९६१ ,, चतुर्विंशतितत्त्वात्मने०
९६२ ,, पञ्चविंशाख्यपुरुषाय०
२६३ ,, सप्तविंशतितारेशाय०
९६४ ,, सप्तविंशतियोगकृते०
९६५ ,, द्वात्रिंशद्भैरवाधीशाय नमः
९६६ ॐ चतुस्त्रिंशन्महान्हदाय नमः
९६७ ,, षट्त्रिंशत्तत्त्वसम्भूतये०
९६८ ,, अष्टत्रिंशत्कलातनये०
९६९ ,, नमदेकोनपञ्चाशन्मरुद्वर्गनिरर्गलाय नमः
९७० ,, पञ्चाशदक्षरश्रेण्यै०
९७१ ,, पञ्चाशद्रुद्रविग्रहाय०
९७२ ,, पञ्चाशद्विष्णुशक्तीशाय नमः
९७३ ,, पञ्चाशन्मातृकालयाय नमः
९७४ ,, द्विपञ्चाशद्वपुश्रेणये०
९७५ , त्रिषष्ट्यक्षरसंश्रयाय०
९७६ ,, चतुःषष्ट्यर्णनिर्णेत्रे०
९७७ ,, चतुःषष्टिकलानिधये०
९७८ ,, चतुःषष्टिमहासिद्धयोगिनीवृन्दवन्दिताय०
९७९ ,, अष्टषष्टिमहातीर्थक्षेत्रभैरवभावनाय नमः
९८० ,, चतुर्नवतिमन्त्रात्मने०
९८१ ,, षण्णवत्यधिकप्रभवे०
९८२ ,, शतानन्दाय नमः

९८३ ॐ शतधृतये नमः
९८४ ,, शतपत्रायतेक्षणाय०
९८५ ,, शतानीकाय नमः
९८६ ,, शतमखाय नमः
९८७ ,, शतधारवरायुधाय०
९८८ ,, सहस्रपत्रनिलयाय०
९८९ ,, सहस्रफणिभूषणाय०
९९० ,, सहस्रशीर्ष्णेपुरुषाय०
९९१ ,, सहस्राक्षाय नम०
९९२ ,, सहस्रपदे नमः
९९३ ,, सहस्रनामसंस्तुत्याय०
९९४ ,, सहस्राक्षबलापहाय०
९९५ ,, दशसहस्रफणभृत्फणिराजकृतासनाय०
९९६ ,, अष्टाशीतिसहस्रौघमहर्षिस्तोत्रपाठिताय०
९९७ ,,लक्षाधारप्रियाधाराय०
९९८ ,, लक्षाधारमनोमयाय०
९९९ ॐ चतुर्लक्षजपप्रीतये०
१००० ,, चतुर्लक्षप्रकाशकाय०
१००१ ,, चतुरशीतिलक्षाणां जीवानां देहसंस्थितये नमः
१००२ ,, कोटिसूर्यप्रतीकाशाय नमः
१००३ ,, कोटिचंद्रांशुनिर्मलाय नमः
१००४ ,, सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतये०
१००५ ,, शिवाभवाद्यष्टकोटिविनायकधुरन्धराय०
१००६ ,,त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकाय०
१००७ ,, अनन्तदेवतासेव्याय नमः
१००८ ,, अनन्तसुखदायकाय नमः

---

## ॥ अथ श्रीपंचश्लोकिगणेशपुराणप्रारंभः ॥

श्रीविघ्नेशपुराणसारमुदितं व्यासाय धात्रा पुरा तत्खंडं प्रथमं महागणपतेश्चोपासनाख्यं यथा ॥ संहर्तुं त्रिपुरं शिवेन गणपस्यादौ कृतं पूजनं कर्तुं सृष्टिमिमां स्तुतः स विधिना व्यासेन बुद्ध्याप्तये ॥१॥ संकष्ट्याश्च विनायकस्य च मनोः स्थानस्य तीर्थस्य वै दूर्वाणां महिमेति भक्तिचरितं तत्पार्थिवस्यार्चनम्।तेभ्यो यैर्यदभीप्सितं गणपतिस्तत्तत्प्रतुष्टो ददौ ताः सर्वा न समर्थ एव कथितुं ब्रह्मा कुतो मानवः ॥२॥ क्रीडाकांडमथो वदेत्कृतयुगे श्वेतच्छविः काश्यपः सिंहांकः स विनायको दशभुजो भूत्वाऽथ काशीं ययौ ॥ हत्वा तत्र नरांतकं तदनुजं देवांतकं दानवं त्रेतायां शिवनंदनो रसभुजो जातो मयूरध्वजः ॥३॥ हत्वा तं कमलासुरं च सगणं सिंधुं महादैत्यपं पश्चात् सिद्धिमतीसुते कमलजस्तस्मै मनोज्ञे ददौ ॥ द्वापारे तु गजाननो युगभुजो गौरीसुतः सिंदुरं संमर्द्य स्वकरेण तं निजमुखे चाखुध्वजो लिप्तवान् ॥ ४ ॥ गीताया उपदेश एव हि कृतो राज्ञे वरेण्याय वै तिष्ये तेऽथ च धूम्रकेतुरभिधो विप्रः सधर्माधिकृत् ॥ अश्वांको द्विभुजोऽसितो गणपतिर्म्लेच्छांतकः स्वर्णदः क्रीडाकांडमिदं गणस्य हरिणा प्रोक्तं विधात्रे पुरा ॥५॥ एतच्छ्लोकसुपंचकं प्रतिदिनं भक्त्या पठेद्यः पुमान्निर्वाणं परमं व्रजेत्स सकलान् भुक्त्वा सुभोगानपि ॥ ६ ॥

॥ इति पंचश्लोकि गणेशपुराणम् ॥

---

## ॥ अथ श्रीगणेशमानसपूजा ॥

नानारत्नविचित्रकं रमणकं सिंहासनं कल्पितं स्नानं जाह्नवीवारिणा गणपते पीतांबरं गृह्यताम् ॥ कंठे मौक्तिकमालिका श्रुतियुगे द्वे धारिते कुंडले नानारत्नविराजितो रविविभो शीर्षे किरीटः शुभः ॥ १ ॥ भाले चर्चितकेशरं मृगमदामोदांकितं चंदनं कस्तूरीतिलकोद्भवं सुकुसुमं मंदारदूर्वाशमी ॥ गुग्गूलोद्भवधूपकं विरचितं दीपं घृतत्यां युतं भक्ष्यं मोदकसंयुतं गणपते क्षीरोदनं गृह्यताम् ॥ २ ॥ तांबूलं मनसा मया विरचितं जंपूफलं दक्षिणा साष्टांगं प्रणतिः स्तुतिर्विधविधा पूजां गृहाण प्रभो ॥ मे कामः सततं तवार्चनविधौ बुद्धिस्तवालिंगने स्वेच्छा ते मुखदर्शने गणपते भक्तिस्तु पादांबुजे ॥३॥ इति श्रीग०मा०पू०समाप्ता॥

## ॥ अथ श्रीगणेशपूजनम् ॥

आचम्य प्राणानायम्य ॥ ॐ केशवाय नमः स्वाहा ॥ ॐ नारायणाय नमः स्वाहा ॥ ॐ माधवाय नमः स्वाहा ॥ ॐ गोविंदाय नमः ॥ इति हस्तप्रक्षालनम् ॥ प्राणायामं कुर्यात् ॥

॥ आशीर्वादः ॥

ॐस्वुस्ति नुऽ इन्द्रो॑ वृद्धश्र्र्वाः स्वुस्ति नः॑ पूषा वि॒श्ववे॑दाः ॥ स्वुस्ति नुस्तार्क्ष्योऽ अरिष्टनेमिः स्वुस्ति नो बृहुस्पतिर्दधातु ॥ २१/२५ ॥ स्वस्तिस्तु या विनाशाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥ ततः शान्तिसूक्तं पठेत् ॥

भद्रसूक्तं पठेत्—ॐआ नो भुद्राः क्रतवो यन्तु विश्वतोऽदब्धासोऽ अपरीतासऽ उद्भिदः॑ ॥ देवा नो यथा सदुमिद्वृधेऽअसुन्नप्रायुवो रक्षितारो दिवेदिवे ॥ १४/२५ ॥ देवानाम्भुद्रा सुमतिर्ऋजूयतान्देवानाथरातिरभि नो निवर्त्तताम् ॥ देवानाथ सुख्यमुपसेदिमा वुयन्देवा नुऽ आयुः प्रतिरन्तु जीवसे ॥ १५/२५ ॥ तान्पूर्वया निविदा हूमहे वुयम्भगम्मित्रमदितिन्दक्षमुस्रिधम् ॥ अर्युमणं वरुणथ सोममुश्विना सरस्वती नः सुभगा मयस्करत् ॥ १६/२५ ॥ तन्नोवातोमयोभुवातुभेषजन्तन्माताप्रृथिवी तत्पिताद्यौः । तद्ग्रावाणः सोमुसुतो मयोभुवुस्तदश्विनाशृणुतन्धिष्ण्या युवम् ॥ १७/२५ ॥ तमीशानुञ्जगतस्तुस्थुषुस्पतिंधियञ्जिन्वमवसे हूमहे वुयम् ॥ पूषा नो यथा वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ १८/२५ ॥ स्वुस्ति नुऽ इन्द्रो वृद्धश्रवाः स्वुस्ति नः॑

पूषा विश्ववेदाः । स्वस्ति नस्ताक्ष्र्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ १९/२५ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ॥ अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽ अवसागमन्निह ॥ २०/२५ ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ २१/२५ ॥ शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ॥ पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ २२/२५ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ॥ विश्वे देवाऽ अदितिः पञ्च जनाऽ अदितिर्जातमदितिर्जनित्वम् ॥ २३/२५ ॥ ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ १७/३६ ॥ यतो यतः समीहसे ततो नोऽ अभयं कुरु ॥ शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः ॥ २१/३६ ॥ सुशान्तिर्भवतु ॥

ॐ श्रीमन्महागणाधिपतये नमः ॥ ॐ इष्टदेवताभ्यो नमः ॥ ॐ कुलदेवताभ्यो नमः ॥ ॐ ग्रामदेवताभ्यो नमः ॥ ॐ स्थानदेवताभ्यो नमः ॥ ॐ वाणीहिरण्यगर्भाभ्यां नमः ॥ ॐ लक्ष्मीनारायणाभ्यां नमः ॐ उमामहेश्वराभ्यां नमः ॥ ॐ शचीपुरन्दराभ्यां नमः ॥ ॐ मातापितृचरणकमलेभ्यो नमः ॥ सर्वेभ्यो देवेभ्यो नमः ॥ ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः ॥ निर्विघ्नमस्तु ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ॥ लम्बोदरश्च

विकटो विघ्ननाशो विनायकः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ॥ येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥ तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥

संकल्पः ॥ हस्ते जलमादाय ॥ विष्णुर्विष्णुर्विष्णुः ॥ श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणो द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके भरतखंडे आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे कुमारिकाक्षेत्रे दंडकारण्ये श्रीपरशुरामाश्रमे तपतीनर्मदायाम्यभागे गोदावर्या उत्तरे तीरे समयातीतसंवत्सराणां संवत् अमुकनामसंवत्सरे अमुकायने अमुक ऋतौ अमुकमासे अमुक-

पक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चंद्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते श्रीदेवगुरौ शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु अस्मिन्पुण्याहे ममात्मनः श्रुतिस्मृतिशास्त्रोक्तफलावाप्तये धर्मार्थकाममोक्षाणां सिद्ध्यर्थं तथा च सकलकुटुंबानाम् आयुरारोग्यैश्वर्याद्यभिवृद्ध्यर्थं तत्सत्परमेश्वरप्रीत्यर्थं श्रीमहागणपतिप्रसादसिद्ध्यर्थं च श्रीसिद्धिबुद्धिसहितमहागणपतिपूजां करिष्ये ।।

तत्रादौ दिग्रक्षणं कलशार्चनं शंखघंटापूजनं पंचवाक्यैः पुण्याहवाचनं च करिष्ये ।। वामहस्ते अक्षतान् गृहीत्वा मंत्रं पठेत् ।।

ॐ कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाँ२ऽ इभेन ।। तृष्वीमनु प्रसितिन्द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ।।९/१३।। तव भ्रमासऽ आशुया पतन्त्यनु स्पृश धृषता शोशुचानः ।। तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः ।।१०/१३।। प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशोऽअस्याऽअदब्धः ।। यो नो दूरेऽअघशंसो योऽअन्त्यग्ने मा किष्टे व्यथिरादधर्षीत् ।।११/१३।। उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ२ऽ ओषतात्तिग्महेते ।। यो नोऽ अरातिं समिधान चक्रे नीचा तन्धक्ष्यतसन्न शुष्कम् ।।१२/१३।। ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।। अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ।। अग्नेष्ट्वा तेजसा सादयामि ।। १३/१३ ।। अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।। अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामवरोधेन

पूजाकर्म समारभे ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः । स्थानादस्माद् व्रजन्त्वन्यत्स्वीकरोमि भुवं त्विमाम् ॥ भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन । ते सर्वेऽप्यपगच्छन्तु पूजाकर्म करोम्यहम् ।

एतैर्मन्त्रैः सर्षपान् सर्वदिक्षु विकीर्य वामपादेन भूमिं त्रिवारं ताडयेत् । उदकोपस्पर्शः ॥

" भूम्यै नमः " सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि ॥

कलशार्चनम् ॥ स्ववामभागे त्रिकोणं षट्कोणं वा जलेन मंडलं कृत्वा तत्राक्षतपुञ्जोपरि कलशं संस्थाप्य वरुणमावाहयेत् ॥

हस्ते अक्षतान् गृहीत्वा ॥ कलशमुखे विष्णवे नमः । कंठे रुद्राय नमः । मूले ब्रह्मणे नमः । मध्ये मातृगणेभ्यो नमः । कुक्षौ सप्तसागरेभ्यो नमः । सप्तद्वीपेभ्यो० । वसुंधरायै० । पूर्वे ऋग्वेदाय नमः । दक्षिणे यजुर्वेदाय नमः । पश्चिमे सामवेदाय नमः । उत्तरे अथर्ववेदाय नमः । मध्ये वरुणाय नमः । एवम् आवाह्य प्रार्थयेत् । गंगे च यमुने चैव गोदावरि सरस्वति । कावेरि नर्मदा वेणि जलेऽस्मिन्सन्निधिं कुरु ॥ ॐ तत्त्वायामि ब्रह्मणा० ॥ २/१ ॥ अस्मिन् कलशे वरुणं साङ्गं सपरिवारम् आवाहयामि पूजयामि । क्रौं अंकुशमुद्रया सर्वाणि तीर्थान्यावाह्य । वं धेनुमुद्रया अमृतीकृत्य । हुं कवचेनावगुंठ्य । मत्स्यमुद्रयाऽऽच्छाद्य । मूलेन (८) अष्टवारम् अभिमंत्र्य । वं वरुणाय नमः । ॐ भूर्भुवः स्वः वरुणाय नमः सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि । नमस्करोमि ॥ धूपं

स० । दीपं० । नैवेद्यं० । फलताम्बूलदक्षिणां समर्पयामि । मन्त्रपुष्पाञ्जलिः ॥ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमंगलाय ॥ सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते ॥ वरुणाय० मंत्रपुष्पाञ्जलिं स० ॥ प्रार्थना ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः ॥ अत्र गायत्री सावित्री शान्तिपुष्टिकरी तथा । आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ कावेरि नर्मदे सिन्धो जलेऽस्मिन्सन्निधिं कुरु ॥ ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ॥ तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ अनया पूजया वरुणः साङ्गः सपरिवारः प्रीयताम् ॥ तस्मादुदकादुदकं गृहीत्वा स्वात्मानं सम्प्रोक्षयेत् । स्वशिरः संप्रोक्षयेत् ॥ पुनः स्वल्पोदकमादाय पूजासामग्रीं संप्रोक्षयेत् ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यंतरः शुचिः ॥ "पुंडरीकाक्षाय नमः" इति त्रिवारं पठेत् ॥

दीपपूजनम् ॥ ॐ अ॒ग्निर्ज्योति॒र्ज्योति॑र॒ग्निः स्वाहा॑० ॥ ३ ॥ भो दीप देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् ॥ यावत्पूजां करिष्यामि तावत्त्वं सन्निधो भव ॥ दीपाय नमः गंधाक्षतपुष्पाणि समर्पयामि ॥

शंखघण्टार्चनम् ॥ ॐ अ॒ग्निर्ऋषि॒ः पव॑मानः॒ पाञ्च॑जन्यः पु॒रोहि॑तः । तमी॑महे महाग॒यम् ॥ २६ ॥ पांचजन्याय विद्महे

पावमानाय धीमहि तन्नः शंखः प्रचोदयात् ॥ शंखस्थदेवतायै नमः सर्वोपचारार्थे गंधाक्षतपुष्पाणि स० । शंखमुद्रां प्रदर्शयेत् ॥ अनया पूजया शङ्खस्थदेवाः प्रीयन्ताम् ॥ घण्टापूजनम् ॥ घण्टास्थितगरुडाय नमः आवाहयामि पूजयामि ॥ सुपर्णोसि० ॥$\frac{४}{१२}$॥ आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ॥ घण्टानादं प्रकुर्वीत पश्चाद् घण्टां प्रपूजयेत् ॥ घण्टास्थितगरुडाय नमः सर्वोपचारार्थे गंधाक्षतपुष्पाणि स० ॥ नमस्करोमि ॥ अनया पूजया गरुडः प्रीयताम् ॥ गरुडमुद्रां प्रदर्शयेत् ॥

पुण्याहवाचनम् ॥ ततः शौनकोक्तविधिना पुण्याहवाचनम् ॥ भो ब्राह्मणाः पुण्याहं भवन्तो ब्रुवन्तु इति यजमानो वदेत् ॥ अस्तु पुण्याहमिति द्विजाः ॥ एवं ३ त्रिवारम् ॥१॥ भो ब्राह्मणाः कल्याणं० ब्रुव० ॥ ३ ॥ अस्तुकल्याणम् ॥ २ ॥ भो ब्राह्मणाः ऋद्धिं० ॥ ३ ॥ कर्मऋद्ध्यताम् ॥ ३ ॥ भो ब्राह्मणाः स्वस्ति० ॥ ३ ॥ आयुष्मते स्वस्ति ॥ ४ ॥ भो ब्राह्मणाः श्रीरस्त्विति० ॥ ३ ॥ अस्तु श्रीः ॥ ५ ॥ अनेन पुण्याहवाचनेन भगवान् प्रजापतिः प्रीयताम् ॥

॥ अथ श्रीगणपतिपूजनम् ॥

आदौ पीठस्थदेवानां पूजनम् ॥ ॐ कारः सर्वत्र योजनीयः ॥ ॐ मंडूकाय नमः मंडूकमावाहयामि ॥ कालाग्निरुद्राय नमः ॥ आधारशक्त्यै० ॥ कूर्माय० ॥ वराहाय ॥ गणपतये० ॥ सुधासिंधुपरिवृतपृथिव्यै० ॥ इक्षुसमुद्राय० ॥ स्वर्णद्वीपाय० ॥ रत्नमंडपाय०॥ मणिवेदिकायै० ॥ गुरुभ्यो०॥ आधारशक्तिकमलासनाय०॥ अनंतासनाय०॥ धर्माय०॥ ज्ञानाय०॥ वैराग्याय०॥

ऐश्वर्याय० ॥ अनैश्वर्याय० ॥ अज्ञानाय० ॥ अवैराग्याय०॥ मध्ये परमानंदाय० ॥ कंदाय० ॥ नालाय० ॥ पद्माय० ॥ पत्रेभ्यो०॥ केसरेभ्यो०॥ कर्णिकायै०॥ सूर्यमंडलाय०॥चंद्रमंडलाय० वह्निमंडलाय० ॥ सत्त्वाय० ॥ रजसे० ॥ तमसे० ॥ आत्मने०॥ अन्तरात्मने० ॥ परमात्मने० ॥ ज्ञानात्मने० ॥ मायातत्त्वाय०॥ कलातत्त्वाय०॥ विद्यातत्त्वाय०॥ परतत्त्वाय०॥ अष्टदिक्षु प्रागादि क्रमेण ॥ तीव्रायै०॥ ज्वालिन्यै० ॥ नंदायै० ॥ भोगदायै० ॥ कामरूपिण्यै० ॥ उग्रायै० ॥ तेजोवत्यै०॥ सत्यायै० ॥ विघ्ननाशिन्यै० ॥ मध्ये पीठशक्तये० ॥ वामे ह्रीं सर्वशक्त्यै० ॥ दक्षिणे पराशक्तिरुद्राय०॥ इति पीठदेवता आवाह्य पूजयेत् ॥ पीठस्थदेवेभ्यो नमः सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि ॥

यंत्रस्थदेवानां पूजनम् ॥ ॐ भूर्भुवः स्वः एवं सर्वत्र ॥ सूर्याय० ॥ सोमाय० ॥ भौमाय० ॥ बुधाय० ॥ गुरवे० ॥ शुक्राय० ॥ शनैश्चराय०॥ राहवे०॥ केतवे०॥ मध्ये गणपतये०॥ चतुर्दलेषु॥ जातवेदसे० ॥ दुर्गायै० ॥ क्षेत्रपालाय० ॥ वास्तोस्पतये० ॥ पूर्वाद्यष्टदलेषु॥ इन्द्राय०॥ अग्नये० ॥ यमाय० ॥ निर्ऋतये० ॥ वरुणाय०॥ वायवे०॥सोमाय०॥ ईशानाय०॥ पूर्वादि चतुर्द्वारेषु॥ पूर्वद्वारे श्रीलक्ष्मीनारायणाभ्यां नमः ॥ दक्षिणद्वारे उमामहेश्वराभ्यां० ॥ पश्चिमद्वारे महीवराहाभ्यां० ॥ उत्तरद्वारे रतिमदनाभ्यां० ॥ यथाशक्त्या पूजयेत् ॥ यन्त्रस्थदेवेभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

अथ ध्यानम् ॥ ॐ गणानान्त्वागणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे

इसोमम ॥ आहमंजानिगर्भधमा त्वमंजासि गर्भधम् ॥ १ ॥
लंबोदरं चर्तुबाहुं त्रिनेत्रं रक्तवर्णकम् ॥ ध्याये गजाननं देवं तप्तकाञ्चनसन्निभम् ॥ ॐ भूर्भुवः स्वः श्रीसिद्धिबुद्धिसहितमहागणपतये नमः ध्यानं समर्पयामि ॥

आदौ देहन्यासः ॥ ॐ सुमुखाय नमः वामकरे । ॐ एकदन्ताय० दक्षिणकरे ॥ ॐ कपिलाय० वामपादे ॥ ॐ गजकर्णकाय० दक्षिणपादे । ॐ लम्बोदराय० वामजानुनि । ॐ विकटाय० दक्षिणजानुनि । ॐ विघ्ननाशाय० वामकक्ष्याम् । ॐ विनायकाय० दक्षिणकक्ष्याम् । ॐ धूम्रकेतवे नमः नाभौ । ॐ गणाध्यक्षाय० हृदये । ॐ भालचंद्राय० कंठे । ॐ गजाननाय० वामबाहुमूले । ॐ गणपतये० दक्षिणबाहुमूले । ॐ गणनायकाय० मुखे । ॐ गजवक्त्राय० नेत्रयोः । ॐ गजाननाय० नासिकायाम् । ॐ एकदंताय० ललाटे । ॐ गजमुखाय० शिखायाम् । ॐ गणाधिपाय० सर्वांगे । अनेन देहन्यासाख्येन कर्मणा श्रीगजाननः प्रीयताम् ॥ एवं देवन्यासं कुर्यात् ॥

आवाहनम्–ॐसहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ स भूमिᳪ सर्वतस्स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

हे हेरम्ब त्वमेह्येहि ह्यम्बिकात्र्यम्बकात्मज । सिद्धिबुद्धियुतोऽध्यक्ष लक्षलाभपितः प्रभो ॥ १ ॥ नागास्य नागहारस्त्वं गणनाथ चतुर्भुज । भूषितः स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥ २ ॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः । इहागत्य गृहाण त्वं पूजां क्रतुं च रक्ष मे ॥३॥ ॐसिद्धिबुद्धिसहितमहागणपतये नमः गणपतिम् आवाहयामि ॥

प्रतिष्ठापनम्—हस्ते जलमादाय अद्येत्यादि० अस्य श्री प्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुःसामानि छन्दांसि । जगत्सृष्टिकारिणी प्राणशक्तिर्देवता आँ बीजं ह्रीं शक्तिः क्रों कीलकम् अस्याः मूर्तेः प्राणप्रतिष्ठापने विनियोगः ॥ हस्ते अक्षतान् गृहीत्वा ॥ ॐ आँ ह्रीँ क्रौं यँ रँ लँ वँ शँ सँ षँ हँ ळँ क्षँ हंसः अस्याः मूर्तेः प्राणाः इह प्राणाः ॥ पुनः आँ ह्रीं क्रौं यँ रँ लँ वँ शँ सँ षँ हँ ळँ क्षँ हंसः अस्याः मूर्तेः जीव इह स्थितः ॥ पुनः आँ ह्रीं क्रौं यँ रँ लँ वँ शँ सँ षँ हँ ळँ क्षँ हंसः अस्याः मूर्ते वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहैवागत्य चिरं तिष्ठन्तु स्वाहा । गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थं पंचदशप्रणवावृत्तिं कुर्यात् ॥

ॐमनोजूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टँय्यज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइह मादयन्तामोꣳम्प्रतिष्ठ ॥ २/२ ॥

प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता । प्रतिष्ठां ते करोम्यत्र मण्डले दैवतैः सह ॥ ॐ सिद्धिबुद्धिसहितमहागणपते सुप्रतिष्ठितो वरदो भव ॥ प्रतिष्ठान्ते चंदनं पुष्पं समर्पयामि ॥

ततः दुर्वाङ्कुरान् गृहीत्वा घृतेनाभ्यज्य नेत्रोद्घाटनं कुर्यात् ॥ सद्यो नैवेद्यं दद्यात् ॥

आसनम्—ॐपुरुषऽएवेदꣳसर्व्वँय्यद्भूतँय्यच्चभाव्यम् । उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २/३१ ॥

विचित्ररत्नरचितं दिव्याभरणसंयुतम् ॥ आसनं देवदेवेश

---

१ द्वे मूर्ती चेत् " अनयोः मूर्त्योः " अधिका मूर्तयश्चेत् " आसां मूर्तीनां " वक्तव्यम् ॥

गृहाण गणनायक ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः आसनार्थे पुष्पम् अर्पयामि ॥

पाद्यम्–ॐएतावानस्य महिमातोज्यायाँश्च पूरुषः ॥ पादोस्यविश्वा भूतानित्रिपादस्यामृतन्दिवि ॥ $\frac{3}{31}$ ॥

उष्णोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम् ॥ पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥ ॐ भू० सिद्धिबुद्धिसहितमहाग० नमः पादयोः पाद्यं सम० ॥

अर्घ्यम्–ॐत्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः । ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥$\frac{4}{31}$॥

ताम्रपात्रे स्थितं तोयं गंधपुष्पफलान्वितम् ॥ सहिरण्यं ददाम्यर्घ्यं गृहाण गणनायक ॥ ॐ भू० सिद्धिबु० स०महागणपतये नमः अर्घ्यं समर्पयामि ॥

आचमनीयम्–ततो विराडजायतविराजोऽअधिपूरुषः ॥ सजातोऽ अत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ $\frac{5}{31}$ ॥

सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलम् ॥ आचामार्थं मया दत्तं गृहाण गणनायक॥ ॐ भू० सि० बु० स० महागणपतये० आचमनीयं सम० ॥

स्नानम्–ॐतस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे वायव्यानारण्याग्राम्याश्च ये ॥$\frac{6}{31}$॥

गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाऽऽहृतम् ॥ तोयमेतत् सुखस्पर्शं स्नानार्थं प्रतिगृह्यताम्॥ॐभू०सि०स०म०ग०स्ना०स०।

पंचामृतस्नानम्—आदौ पयःस्नानम्—ॐपयं÷ पृथिव्याम्पयुऽ ओषंधीषु पयों दिव्युन्तरिक्षे पयों धाः ॥ पयंस्वतीः प्रदिशं÷सन्तु मह्यंम् ॥ $\frac{१६}{६८}$ ॥ कामधेनुसमुद्भूतं सर्वेषां जीवनं परम् ॥ पावनं यज्ञहेतुश्च पयःस्नानार्थमर्पितम् ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिस० महागणपतये नमः पयःस्नानं समर्पयामि । पयःस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

दधिस्नानम्—दुधिक्राव्णोंऽ अकारिषञ्जिष्णोरश्वंस्यवाजिनं÷ सुरुभि नो मुखा करत्प्र णुऽ आयूंᳪषि तारिषत् ॥ $\frac{३२}{२३}$ ॥

चंद्रमंडलसंकाशं सर्वदेवप्रियं दधि ॥ स्नानार्थं ते मया दत्तं गृहाण गणनायक ॥ ॐ भू० सि० बु० स० महागणपतये० दधिस्नानं स० । दधिस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं समर्प० ॥

घृतस्नानम्—घृतम्मिमिक्षे घृतमंस्य योनिर्घृते श्रितो घृतंम्वंस्य धामं ॥ अनुष्ष्वधमावंह मादयंस्व स्वाहां कृतं वृषभ वक्षि हुव्यम् ॥ $\frac{८८}{१७}$ ॥

नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् ॥ घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥ ॐ भू० सि० बु० स० म० गणपतये० घृतस्नानं स० ॥ घृतस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं स० ॥

मधुस्नानम्—ॐमधुवाताऽ ऋतायुते मधुं क्षरन्ति सिन्धंवः ॥ माध्वींर्नः सुन्त्वोषंधीः ॥ मधु नक्तंमुतोषसो मधुंमुत्पार्थिवुᳪरजं÷ ॥ मधुद्यौरंस्तु नः पिता ॥ मधुंमान्नो वनुस्पतिर्म्मधुंमाँ२ऽ अस्तु सूर्य्यं÷ ॥ माध्वीर्गावों भवन्तु नः ॥ $\frac{२७।२८।२९}{१३}$ ॥

तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ॥ तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ ॐ भू० सिद्धिबुद्धिस० म० गणपतये० मधुस्नानं स० ॥ मधुस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

शर्करास्नानम्—ॐअपाᳬं रसमुद्वयसुᳬं सूर्य्ये सन्तᳬं समाहितम् ॥ अपाᳬंरसस्य यो रसस्तं वो गृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टंगृह्णाम्म्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥३/१॥

इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ॥ मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥ ॐ भू० सि० बु० स० म० ग० नमः शर्करास्नानं स० ॥ शर्करास्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं स० ॥

एकतन्त्रेण पंचामृतस्नानम्—पञ्चनद्यः ÷ सरस्वतीमपियन्ति सस्रोतसः॥ सरस्वती तु पंञ्चधासोदेशेभवत्सरित् ॥३४/११॥ पयो दधि घृतं चैव मधु च शर्करायुतम् ॥ पंचामृतं मया दत्तं गृहाण परमेश्वर ॥ ॐ भू० सि० बु० स० म० गणपतये० मिलितपञ्चामृतस्नानं स० ॥ मिलितपंचामृतस्नानान्ते शुद्धोदकस्नानं स० ॥ शुद्धोदकस्नानान्ते आ० स० ॥

गन्धोदकस्नानम्—ॐगन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽ ईडितः ॥३/१॥

मलयाचलसम्भूतं चन्दनागरुसम्भवम् ॥ चन्दनं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धि-

सहितमहागणपतये नमः गंधोदकस्नानं समर्पयामि । गंधोदकस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

उद्वर्तनस्नानम्–ॐअंशुनां ते अंशुः पृच्यतांपरुषा परुः ॥ गन्धस्ते सोममवतु मदाय रसोऽ अच्युतः ॥ २७ ॥ – नाना सुगन्धि द्रव्यं च चंदनं रजनीयुतम् ॥ उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ ॐ भू० सि० बु० स० म० गणपतये० उद्वर्तनस्नानं स० ॥ उद्वर्तनस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

कावेरी नर्मदा वेणी तुङ्गभद्रा सरस्वती ॥ गंगा च यमुना तोयं स्नानार्थं प्रतिगृह्यताम् ॥ ॐ भू० सि० बु० स० म० गणपतये० शुद्धोदकस्नानं समर्पयामि ॥ पंचोपचारैः पूजयेत्– ॐ भूर्भुवः स्वः सि० बु० स० महागणपतये नमः गंधं स० ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः अक्षतान् स० ॥ ॐ भू० सि० बु० स० म० गणपतये नमः दूर्वांकुरयुक्तं पुष्पं समर्पयामि । ॐ भू० सि० बु० स० म० गणपतये नमः धूपमाघ्रापयामि । ॐ भू० सि० बु० स० म० गणपतये नमः दीपं दर्श० ॥ ॐ भू० सि० बु० स० महागणपतये नमः नैवेद्यम् अर्पयामि ॥ अनेन पंचामृतपूर्वकपंचोपचारैः पूजनेन सिद्धिबुद्धिसहितमहागणपतिः प्रीयताम् ॥ उत्तरे निर्माल्यं विसृज्य पुनः गंधादिभिः संपूज्य गणेशाथर्वशीर्षेण वा पुरुषसूक्तेन वा संकष्टनाशनगणपतिस्तोत्रेण अभिषेकं कुर्यात् ॥

---

ॐ श्रीगणेशाय नमः

## ॥ अथ श्रीगणेशाथर्वशीर्षप्रारंभः ॥

ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्त्ताऽसि । त्वमेव केवलं धर्त्ताऽसि । त्वमेव केवलं हर्त्ताऽसि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्माऽसि नित्यम् ॥ १ ॥ ऋतं वच्मि । सत्यं वच्मि ॥ २ ॥ अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् ॥ अव धातारम् ॥ अवानूचानमवशिष्यम् ॥ अव पश्चात्तात् ॥ अव पुरस्तात् । अवोत्तरात्तात् । अव दक्षिणात्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् ॥३॥ त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोऽसि ॥॥४ ॥ सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति ॥ त्वं भूमिरापोऽनलोऽनिलो नभः । त्वं चत्वारि वाक्पदानि ॥ ५ ॥ त्वं गुणत्रयातीतः । त्वमवस्थात्रयातीतः ॥ त्वं देहत्रयातीतः । त्वं कालत्रयातीतः ।

---

१ અથર્વશીર્ષથી અભિષેક કરવો એ શ્રેયસ્કર છે. અભિષેકનાં ત્રણ સ્વરૂપો પ્રયોગરત્નમાં બતાવ્યાં છે. જેમકે "गणेशाथर्वशीर्षेण गणेशस्याभिषिञ्चनम् । एकविंशतिवारं स्यादभिषेकस्तु स स्मृतः" ॥ ६० ॥

એકવિશ વાર અથર્વશીર્ષ ભણીને શ્રીગણેશના ઉપર અભિષેક કરવાથી એક અભિષેક થાય છે એવા એકવિશ અભિષેક કરવાથી લઘુ અભિષેક થાય છે, અને એકસોને આઠ અભિષેક કરવાથી મહાભિષેક થાય છે. કામનાપરત્વે અથર્વણ ઋષિએ સહસ્રાવર્તનથી અભિષેક વગેરે અન્ય પ્રકારોનું વર્ણન કર્યું છે.

त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः ॥ त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चंद्रमास्त्वं ब्रह्म भूर्भुवःस्वरोम् ॥ ६ ॥ गणादीन् पूर्वमुच्चार्य वर्णादींस्तदनंतरम् । अनुस्वारः परतरः ॥ अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् ॥ अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् ॥ बिंदुरुत्तररूपम् ॥ नादः संधानम् । संहिता सन्धिः । सैषा गणेशविद्या । गणक ऋषिः ॥ निचृद्गायत्री छंदः । गणपतिर्देवता । ॐ गं गणपतये नमः ॥ ७ ॥ ॐ एकदन्ताय विद्महे वक्रतुंडाय धीमहि । तन्नो दंती प्रचोदयात् ॥८॥ ॐ एकदंतं चतुर्हस्तं पाशमङ्कुशधारिणम् ॥ रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् । रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् ॥ रक्तगंधानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकंपिनं देवं जगत्कारणमच्युतम् ॥ आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥ ९ ॥ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः ॥१०॥ एतदथर्वशीर्षं योऽधीते स ब्रह्मभूयाय कल्पते । स सर्वविघ्नैर्न बाध्यते । स सर्वतः सुखमेधते । स पंचमहापापात्प्रमुच्यते ॥ सायमधीयानो दिवसकृतं पापं नाशयति ॥ प्रातरधीयानो रात्रिकृतं पापं नाशयति ॥ सायम्प्रातः प्रयुंजानो अपापो भवति । सर्वत्राधीयानोऽपविघ्नो भवति धर्मार्थकाममोक्षं च विन्दति ॥ इदमथर्वशीर्षमशिष्याय न देयम् ।

यो यदि मोहाद्दास्यति स पापीयान्भवति । सहस्रावर्तनाद्यं यं काममधीते तं तमनेन साधयेत् ॥११॥ अनेन गणपतिमभिषिंचति स वाग्मी भवति । चतुर्थ्यामनश्नन् जपति स विद्यावान्भवति । इत्यथर्वणवाक्यम् । ब्रह्माद्यावरणं विद्यान्न बिभेति कदाचनेति ॥ १२ ॥ यो दुर्वांकुरैर्यजति स वैश्रवणोपमो भवति । यो लाजैर्यजति स यशोवान्भवति स मेधावान्भवति ॥ यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति ॥ यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते ॥ १३ ॥ अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति ॥ सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा सिद्धमन्त्रो भवति । महाविघ्नात्प्रमुच्यते । महादोषात्प्रमुच्यते । महाप्रत्यवायात्प्रमुच्यते । स सर्वविद्भवति । स सर्वविद्भवति । य एवं वेद ॥ १४ ॥ इत्युपनिषत् ॥ सह नाववतु । सह नौ भुनक्तु । सहवीर्यं करवावहै । तेजस्विनावधीतमस्तु । मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इत्यथर्वणवेदोपनिषत्सु गणेशाथर्वशीर्षं समाप्तम् ॥

---

॥ अथ पुरुषसूक्तम् ॥

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ स भूमिꣳ सर्वतस्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

पुरुषऽ एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

एतावानस्य महिमातो ज्यायांश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

त्रिपादूर्ध्वऽ उदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततो विष्व-
ङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४ $\frac{४}{३१}$ ॥

ततो विराडजायत विराजोऽ अधि पूरुषः ॥ स जातोऽ-
अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ $\frac{५}{३१}$ ॥

तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे
वायव्यानारण्या ग्राम्याश्च ये ॥ ६ $\frac{६}{३१}$ ॥

तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे ॥ छन्दाँसि
जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ $\frac{७}{३१}$ ॥

तस्मादश्वाऽ अजायन्त ये के चोभयादतः ॥ गावो ह ज-
ज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥ ८ $\frac{८}{३१}$ ॥

तं यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेन देवाऽअयज-
न्त साध्याऽऋषयश्च ये ॥ ९ $\frac{९}{३१}$ ॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ॥ मुखं किमस्यासी-
त्किम्बाहू किमूरू पादाऽउच्येते ॥ १० $\frac{१०}{३१}$ ॥

ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः ॥ ऊरू तदस्य
यद्वैश्यः पद्भ्याँ शूद्रोऽ अजायत ॥ ११ $\frac{११}{३१}$ ॥

चन्द्रमा मनसो जातश्चक्षोः सूर्योऽ अजायत ॥ श्रोत्राद्वा-
युश्च प्राणश्च मुखादग्निरजायत ॥ १२ $\frac{१२}{३१}$ ॥

नाभ्याऽआसीदन्तरिक्षँ शीर्ष्णो द्यौः समवर्त्तत ॥ पद्भ्या-
म्भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ऽ अकल्पयन् ॥ १३ $\frac{१३}{३१}$ ॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ॥ वसन्तोस्यासीदाज्यं-
ग्रीष्मऽइध्मः शरद्धविः ॥ १४ $\frac{१४}{३१}$ ॥

सुप्तास्स्यासन्त्परिधयस्त्रिः सुप्तसमिर्धः कृताः ॥ देवा यद्यज्ञन्तन्वानाऽ अबध्नन्पुरुषम्पशुम् ॥ १५ ॥

युज्ञेनं युज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥ ते हु नार्कम्महिमानः सचन्तु यत्र पूर्वे साद्ध्याः सन्ति देवाः ॥ १६ ॥

॥ इति पुरुषसूक्तम् ॥

---

॥ श्रीसंकष्टनाशनगणपतिस्तोत्रम् ॥

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् ॥ भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये ॥ १ ॥ प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् ॥ तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥ २ ॥ लम्बोदरं पञ्चमं च षष्ठं विकटमेवच ॥ सप्तमं विघ्नराजं च धूम्रवर्णं तथाऽष्टमम् ॥ ३ ॥ नवमं भालचन्द्रं च दशमं तु विनायकम् ॥ एकादशं गणपतिं द्वादशं तु गजाननम् ॥ ४ ॥ द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः ॥ न च विघ्नभयं तस्य सर्वसिद्धिकरं परम् ॥ ५ ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥ पुत्रार्थी लभते पुत्रान् मोक्षार्थी लभते गतिम् ॥ ६ ॥ जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् ॥ संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥ ७ ॥ अष्टानां ब्राह्मणानां च लिखित्वा यः समर्पयेत् ॥ तस्य विद्या भवेत् सर्वा गणेशस्य प्रसादतः ॥ ८ ॥ इति संकष्टनाशनगणपतिस्तोत्रम् ॥

---

शुद्धोदकस्नानम्—ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽ आंश्विनाः श्येतः श्येताक्षोरुणस्ते रुद्राय पशुपतये कर्णा यामाऽअवलिप्ता रौद्रा नभोरूपाः पार्ज्जन्याः ॥

गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाऽऽहृतम् ॥ तोयमेतत्सुखस्पर्शं स्नानार्थं प्रतिगृह्यताम् ॥ ॐ भू० सिद्धिबुद्धिसहितमहागणपतये नमः शुद्धोदकस्नानं स० ॥ आचमनीयं स० ॥ ततो वस्त्रेण प्रोञ्छयित्वा देवं स्वस्थाने संस्थापयेत् ॥

वस्त्रे :–तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे ॥ छन्दांᳬसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७/३१ ॥

सर्वभूषादिके सौम्ये लोकलज्जानिवारिणे ॥ मयोपपादिते तुभ्यं गृह्येतां वाससी त्वया॥ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः वस्त्रयुग्मम् अर्पयामि ॥ वस्त्रान्ते आचमनीयं स० ॥

यज्ञोपवीतम्–ॐतस्मादश्वाऽ अजायन्त ये के चोभयादतः ॥ गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽ अजावयः ॥ ८/३१ ॥

नवभिस्तंतुभिर्युक्तं त्रिगुणं देवतामयम् ॥ उपवीतं मया दत्तं गृहाण गणनायक॥ ॐ भू० सिद्धिबुद्धि स० महागण० नमः यज्ञोपवीतं स० । यज्ञोपवीतान्ते आचमनीयं स० ॥

गन्ध :–ॐत्वां गन्धर्वाऽ अखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ९८/१२ ॥

तँयज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः । तेन देवाऽअयजन्त साध्याऽऋषयश्च ये ॥ ९/३१ ॥

श्रीखंडं चंदनं दिव्यं गन्धाढ्यं सुमनोहरम् ॥ विलेपनं सुरश्रेष्ठ चंदनं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः सि० बु० सहितमहागण० नमः गन्धं समर्पयामि ॥

अक्षताः–ॐअक्षन्नमीमदन्त ह्यव प्रियाऽअधूषत ॥अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥ ५१/३ ॥

अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः ॥ मया निवेदिता भक्त्या गृहाण परमेश्वर ॥ ॐ भू० सि० बु० स० महागणप० नमः अक्षतान्समर्पयामि ॥

पुष्पाणिः—यत्पुरुषं॒व्यद॑धुः कति॒धा व्य॑कल्पयन् । मुखं॒ कि॒म॑स्यासी॒त्किं बा॒हू किमू॒रू पादा॑ उच्येते ॥ $\frac{३०}{३१}$ ॥

माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ॥ मयाऽऽनीतानि पुष्पाणि गृहाण परमेश्वर ॥ ॐ भू० सि० बु० स० म० गणपतये० ऋतुकालोद्भवानि पुष्पाणि स० ॥

दूर्वाः—काण्डा॑त्काण्डात्प्र॒रोह॑न्ती॒ परु॑षःपरुष॒स्परि॑ ॥ ए॒वा नो॑ दूर्वे॒ प्रत॑नु स॒हस्रे॑ण श॒तेन॑ च ॥ $\frac{३०}{१३}$ ॥

दूर्वा ह्यमृतसम्पन्ना शतमूला शताङ्कुरा ॥ शतं पातकसंहन्त्री शतमायुष्यवर्धिनी ॥ ॐ भूर्भुवःस्वः सिद्धिबुद्धिसहितमहाग० नमः दूर्वाङ्कुरान् सम० ॥

अथाङ्गपूजा—ॐ गणेश्वराय नमः पादौ पूजयामि ॥ ॐ विघ्नराजाय नमः जानुनी पूजयामि । ॐ आखुवाहनाय नमः ऊरू पूजयामि । ॐ हेरम्बाय नमः कटी पूजयामि ॥ ॐ कामारिसूनवे नमः नाभिं पूजयामि । ॐ लम्बोदराय नमः उदरं पूजयामि । ॐ गौरीसुताय नमः स्तनौ पूजयामि । ॐ गणनायकाय नमः हृदयं पूजयामि । ॐ स्थूलकण्ठाय नमः कण्ठं पूजयामि । ॐ स्कन्दाग्रजाय नमः स्कन्धौ पूजयामि । ॐ पाशहस्ताय नमः हस्तौ पूजयामि । ॐ गजवक्त्राय नमः वक्त्रं पूजयामि । ॐ विघ्नहर्त्रे नमः ललाटं पूजयामि । ॐ सर्वेश्वराय नमः शिरः पूजयामि । ॐ गणाधिपाय नमः सर्वाङ्गं पूजयामि । तत आवरणपूजां कुर्यात् ॥

अथावरणपूजा-प्रथमावरणम्—ॐ गणेशाय० । उमापुत्राय०॥ अघनाशनाय० । हेरंबाय० । गजवक्त्राय० । सुमुखाय० । एकदं-

तायः । कपिलायः । विकटायः । विघ्ननाशनायः । भालचंद्रायः। गणाध्यक्षायः । धूम्रकेतवेः । ईशपुत्रायः॥ दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ अनेन प्रथमावरणार्चनेन भगवान् महागणपतिः प्रीयतां नमम ॥ एवं सर्वत्र ॥ १ ॥

द्वितीयावरणम्—वीरगणपतयेः । शूरगणपतयेः । वरदगणपतयेः। विनायकगणपतयेः। इभास्यगणपतयेः। एकदंतगणपतयेः। क्षिप्रगणपतयेः। श्रीसिद्धिगणपतयेः ॥ दयाब्धेः। द्वितीयावरणार्चनम् ॥ अनेन द्वितीः भः महागणपतिः प्रीयताम् नमम ॥ २ ॥

तृतीयावरणम्—रामायः । रमेशायः। गिरिजायः। वृषांकायः । रत्यैः । मदनायः । वराहायः । श्रियैः ॥ दयाब्धेः । तृतीयावरणार्चनम् ॥ अनेन तृतीः भः मः गः प्रीः नमम ॥ ३ ॥

चतुर्थावरणम्—सिद्धयेः । समृद्धयेः । कान्त्यैः । मदनवत्यैः । मदनचद्रायः । विद्यायैः ॥ दयाब्धेः । चतुर्थावरणार्चनम् ॥ अनेन चतुर्थावः भः मः गः प्रीः नमम ॥ ४ ॥

पंचमावरणम्—रवयेः । सोमायः । अंगारकायः । बुधायः । बृहस्पतयेः । शुक्रायः । शनैश्चरायः । राहवेः। केतवेः॥ दयाब्धेः। पंचमावरणार्चनम् ॥ अनेन पंचमावः भः मः गः प्रीः नमम ॥ ५ ॥

षष्ठावरणम्—इंद्रायः । अग्नयेः । यमायः निर्ऋतयेः । वरुणायः । वायवेः । सोमायः । ईशानायः ॥ दयाब्धेः । षष्ठावरणार्चनम् ॥ अनेन षष्ठावः भः मः गः प्रीः नमम ॥ ६ ॥

सप्तमावरणम्—अजायः। वृषभायः। युग्मायः। कर्कायः। सिंहायः । कन्यायैः । तुलायैः । वृश्चिकायः । धनुषेः । मकरायः। कुंभायः । मीनायः ॥ दयाब्धेः । सप्तमावरणार्चनम् ॥ अनेन सप्तमावरणार्चनेन भः महागणपतिः प्रीयतां नमम ॥ ७ ॥

अष्टमावरणम्—असितांगभैरवायः। रुरुभैरवायः। उन्मत्तभैः। क्रोधभैः । संहारभैः । चन्द्रभैः । भीषणभैः । कपालभैः ॥ दयाब्धेः । अष्टमावरणार्चनम् ॥ अनेन अष्टमावरणार्चनेन भः महागणपतिः प्रीयताम् नमम ॥ ८ ॥

नवमावरणम्—सत्त्वाय नमः । रजसे नमः । तमसे० । महते० । अग्नये० ॥ दद्यादर्घ्यं० । नवमावरणार्चनम् ॥ अनेन नवमा० भ० म० ग० प्री० नमम ॥ ९ ॥

दशमावरणम्—रवये० । त्वष्ट्रे० । वाचस्पतये० । अहंकाराय० ॥ दद्यार्घ्यं० । दशमावरणार्चनम् ॥ अनेन दशमावरणेन भ० महाग० प्रीयतां नमम ॥ १० ॥

एकादशावरणम्—अज्ञानाय० । पृथिव्यै० । औषधीशाय० । औषधिवनस्पतिभ्यो० । पर्जन्याय० । आकाशाय० ॥ दद्यार्घ्यं० । एकादशावरणार्चनम् ॥ अनेन एकादशाव० भ० म० ग० प्री० नमम ॥११॥

द्वादशावरणम्—गायत्र्यै० । सावित्र्यै० । सरस्वत्यै० । कृष्णायै० ॥ दद्यार्घ्यं० । द्वादशावरणार्चनम् ॥ अनेन द्वादशावर० भ० म० ग० प्री० नमम ॥ १२ ॥

त्रयोदशावरणम्—दयायै० । यमाय० । अग्नये० । ब्रह्मणे० । शशभृते० । अतीताय० ॥ दद्यार्घ्यं० । त्रयोदशावरणार्चनम् ॥ अनेन त्रयोदशावर० भ० म० ग० प्री० नमम ॥ १३ ॥

चतुर्दशावरणम्—इज्याय० । उरगाय० । पितृभ्यो० । भगाय० । अर्यम्णे० । हस्ताय० । त्वष्ट्रे० ॥ दद्यार्घ्यं० । चतुर्दशावरणार्चनम् ॥ अनेन चतुर्दशावर० भ० म० ग० प्री० नमम ॥ १४ ॥

पंचदशावरणम्—समाराय० । शक्राग्नीभ्यां० । मित्राय० । इन्द्राय० । निर्ऋतये० । अद्भ्यो० । विश्वाय० ॥ दद्यार्घ्यं० । पञ्चदशावरणार्चनम् ॥ अनेन पञ्चदशावर० भ० म० ग० प्री० नमम ॥ १५ ॥

षोडशावरणम्—विधये० । गोविंदाय० । वसुभ्यो० । वरुणाय० । अजचरणाय० । अहिर्बुध्न्याय० । पूष्णे० ॥ दद्यार्घ्यं० । षोडशावरणार्चनम् ॥ अनेन षोडशावर० भ० म० ग० प्री० नमम ॥ १६ ॥

सप्तदशावरणम्—अग्नितेजसे० । वह्नितेजसे० । सूर्यतेजसे० । चंद्रतेजसे० ॥ दद्यार्घ्यं० । सप्तदशावरणार्चनम् ॥ अनेन सप्तदशावरणार्चनेन भ० म० ग० प्री० नमम ॥ १७ ॥

अष्टादशावरणम्--व्राह्यै० । माहेश्वर्यै० । कौमार्यै० । वैष्णव्यै० । वाराह्यै० । इंद्राण्यै० । चामुंडायै० ॥ दयाव्धे० । मष्टादशावरणार्चनम् ॥ अनेन अष्टादशावरणार्चनेन भ० म० ग० प्री० नमम ॥१८॥

एकोनविंशावरणम्--विष्कुंभाय० । प्रीतये० । आयुष्मते० । सौभाग्याय० । शोभनाय० ॥ अतिगंडाय० ॥ दयाव्धे० । मेकोनविंशावरणार्चनम् ॥ अनेन एकोनविंशावर० भ० म० ग० प्री० नमम ॥१९॥

विंशावरणम्--सुकर्मणे० । धृतये० । शूलाय० । गंडाय० । वृद्धये० । ध्रुवाय० । व्याघाताय० । हर्षणाय० । वज्राय० । सिद्धये० । व्यतीपाताय० । वरीयसे० । परिघाय० ॥ दयाव्धे० । विंशावरणार्चनम् ॥ अनेन विंशावरणा० भ० म० ग० प्री० नमम ॥२०॥

एकविंशावरणम्--शिवाय० । सिद्धाय० । साध्याय० । शुभाय० । शुक्लाय० । ब्रह्मणे० । ऐंद्राय० । वैधृतये० । श्रीसत्यविनायकाय सिद्धिवुद्धिसहिताय सांगाय सपरिवाराय सायुधाय सशक्तिकाय महागणपतये नमः ॥ दयाव्धे० । मेकविंशावरणार्चनम् ॥ अनेन एकविंशावरणार्चनेन भगवान् महागणपतिः प्रीयतां नमम ॥२१॥

॥ इत्यावरणपूजा ॥

---

अथ पत्रपूजा—ॐ सुमुखाय नमः मालतीपत्रं समर्पयामि ॥ ॐ गणाधिपाय नमः भृंगराजपत्रं स० ॥ ॐ उमापुत्राय० बिल्वपत्रं स० । ॐ गजाननाय० श्वेतदूर्वापत्रं स० । ॐ लंबोदराय० बदरीपत्रं स० । ॐ हरसूनवे० धत्तूरपत्रं स० । ॐ गजकर्णकाय० तुलसीपत्रं स० । ॐ वक्रतुंडाय० शमीपत्रं स० । ॐ गुहाग्रजाय० अपामार्गपत्रं स० । ॐ एकदंताय बृहतीपत्रं स० । ॐ विकटाय० करवीरपत्रं स० । ॐ कपिलाय० अर्कपत्रं स० । ॐ गजदंताय० अर्जुनपत्रं स० ।

१ એકવિશ જાતની પત્રિકાનાં નામો—માલતી, ભાંગરો, બીલ, શ્વેતદૂર્વા, બોરડી, ધંતૂરો, તુલસી, શમી, અઘેડો, ડોરલી, કરેણ, આકડો, અર્જુન, ( સાદડો ) વિષ્ણુક્રાન્ત, દાડિમ, દેવદાર, આંબાનો મોર, પીપળી, જાઈ, કેવડો, અગથીઓ. ૨૧

ॐ विघ्नराजाय० विष्णुक्रान्तपत्रं स०। ॐ वटवे० दाडिमीपत्रं स०। ॐ सुराग्रजाय० देवदारुपत्रं स०। ॐ भालचंद्राय मरुपत्रं स०। ॐ हेरंबाय० अश्वत्थपत्रं स०। ॐ चतुर्भुजाय० जातीपत्रं स०। ॐ विनायकाय० केतकीपत्रं स०। ॐ सर्वेश्वराय० अगस्तिपत्रं स० ॥ २१ ॥ इति पत्रपूजा ॥

---

एकविंशति पुष्पपूजा-ॐसुमुखाय नमः जातीपुष्पं समर्पयामि। ॐ लंबोदराय० कर्णिकापुष्पं स०। ॐ विकटाय० केतकीपुष्पं स०। ॐ विनायकाय० वकुलपुष्पं स०। ॐ विघ्नहर्त्रे० शतपत्रपुष्पं स०। ॐ धूम्रकेतवे० पुन्नागपुष्पं स०। ॐ गजकर्णाय० करवीरपुष्पं स०। ॐ उमापुत्राय० पारिजातकपुष्पं स०। ॐ अघनाशिने० नागकेशरपुष्पं स०। ॐ ईशपुत्राय० पद्मपुष्पं स०। ॐ सर्वसिद्धिप्रदायकाय० मल्लिकापुष्पं समर्पयामि। ॐ मूषकवाहनाय० कल्हारपुष्पं समर्पयामि॥ ॐ इभवक्त्राय० गिरिकर्णिकापुष्पं स०। ॐ कुमारगुरवे० गोचिन्दपुष्पं स०। ॐ दीर्घतुंडाय० मुनिपुष्पं स०। ॐ भालचंद्राय० पाटलपुष्पं स०। ॐ एकदंताय० अर्कपुष्पं स०। ॐ गणाध्यक्षाय० दाडिमीपुष्पं स०। ॐ गणपतये० जासुकीपुष्पं स०। ॐ सिद्धिविनायकाय० मधुमालतीपुष्पं स०। विघ्नराजाय० श्वेतकर्णिकापुष्पं स० ॥ २१ ॥

॥ इति पुष्पपूजा ॥

---

अनंतरं गणेशस्य (१०८) अष्टोत्तरशतनामभिर्वा (१०००) सहस्रनामभिः दूर्वार्पणम् ॥

---

सौभाग्यद्रव्याणि—ॐअहिरिव भोगैः पर्य्येति बाहुञ्ज्याया हेतिम्पर्रिबाधमानः ॥ हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाᳬंसम्परिपातु विश्वतः ॥ $\frac{५१}{२२}$ ॥

अबीरं च गुलालं च चुवाचन्दनमेवच। सिंदूरेण समायुक्तं

सौभाग्यं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहित-महागणपतये नमः सौभाग्यद्रव्याणि समर्पयामि ॥

धूपः—ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽअजायत ॥ ११/३१ ॥

वनस्पतिरसोद्भूतो गंधाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ॐ भूर्भुव० सि० बु० स० महागणपतये० धूपमाघ्रापयामि ॥

दीपः–ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्योऽ अजायत ॥ श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२/३१ ॥

साज्यश्च वर्तिसंयुक्तं वह्निना योजितं मया ॥ दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥ ॐ भू० सि० बु० स० महागणप० दीपं दर्श० । दीपाधिष्ठातृदेवेभ्यो नमः गंधाक्षतपुष्पं स० ॥

नैवेद्यम्ः–नाभ्याऽआसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत॥ पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँऽ२ऽ अकल्पयन् ॥ १३/३१ ॥

अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ॥ आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥ नैवेद्यं जलेन संप्रोक्ष्य धेनुमुद्रया अमृतीकृत्य ग्रासमुद्रां प्रदर्श्य देवस्य मुखे अमृतोपस्तरणमसि स्वाहा । ग्रासमुद्रया ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ उदानाय स्वाहा । ॐ समानाय स्वाहा॥ ॐ भू०सि०बु०स० महाग० नैवेद्यं निवेदयामि। नैवेद्यमध्ये पानीयम् ॥ पुनः ॐ प्राणाय स्वाहा । ॐ अपानाय० । ॐ व्यानाय० । ॐ उदानाय० । ॐ समानाय० । उत्तरापोशानम् । हस्तप्रक्षालनम् । मुखप्रक्षालनम् । करोद्वर्तनार्थे गन्धं स० ।

तांबूलम्ः-यत्पुरुषेण हविषा देवायज्ञमतन्वत । वसन्तोस्या-सीदाज्ज्यंङ्ग्रीष्मऽइद्ध्मः शरद्धविः ॥ $\frac{१४}{३१}$ ॥

नागवल्लीदलैर्युक्तं पूगीफलसमन्वितम् ॥ एलादिचूर्णसंयुक्तं तांबूलं प्रतिगृह्यताम् ॥ ॐ भू० सि० बु० स० महागणप० मुखवासार्थे पूगीफलतांबूलं स० ॥

फलानि-ॐयाः फलिनीर्याऽ अफलाऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वᳪहसः ॥$\frac{८९}{१२}$॥

दक्षिणा-ॐयद्दत्तंयत्परादानंयत्पूर्तंयाश्च दक्षिणाः ॥ तदग्निर्वैश्वकर्म्मणः स्वर्द्देवेषु नो दधत् ॥$\frac{६४}{१८}$॥

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः॥ अनंतपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहा-गणपतये नमः पूजासाद्गुण्यार्थे हिरण्यदक्षिणां समर्पयामि ॥

अलंकारः—वज्रमाणिक्यवैदूर्यमुक्ताविद्रुममंडितम् ॥ पुष्प-रागसमायुक्तं भूषणं गृह्यतां प्रभो ॥ ॐ भूर्भुव० सि० बु० स० म० ग० अलंकारान् समर्पयामि ॥

युग्मदूर्वार्पणम्ः-ॐ गणाधिपाय नमः दूर्वायुग्मं समर्पयामि॥ ॐ उमापुत्राय० दूर्वायुग्मं स०। ॐ अघनाशनाय०दूर्वायुग्मं स०॥ ॐ विनायकाय० दूर्वायुग्मं स०। ॐ ईशपुत्राय० दूर्वायुग्मं स०। ॐ सिद्धिप्रदायकाय० दूर्वायुग्मं स०। ॐ एकदंताय०दूर्वायुग्मं स०। ॐ इभवक्त्राय० दूर्वायुग्मं स०। ॐ आखुवाहनाय०दूर्वा-युग्मं स०। ॐ कुमारगुरवे० दूर्वायुग्मं स०। पश्चात् एकदूर्वाङ्कुरं गृहीत्वा। गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन ॥ एकदन्ते-भवक्त्रेति तथा मूषकवाहन ॥ विनायकेशपुत्रेति सर्वसिद्धिप्रदा-

यक्र। कुमारगुरवे नित्यं पूजनीयः प्रयत्नतः। ॐ भूर्भुवः स्वः सि० बु० सहितमहागणपतये नमः एकां दूर्वां समर्पयामि॥

आर्तिक्यम्:—निराजनीं प्रज्वाल्य ज्वालामालिन्यै नमः गंधाक्षतपुष्पाणि समर्पयामि॥

आरांत्रि पार्थिवुङ्ग रजः पितुरप्रायि धामभिः॥ दिवः सदांसि बृहती वितिष्ठसऽआत्वेषं वर्त्तते तमः॥ ३२/३॥

· सौभाग्यद्रव्यम्॥ कर्पूरेण नीराजनम्॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्। सदा वसन्तं हृदयारविंदे भवं भवानीसहितं नमामि॥ कर्पूरपूरेण मनोहरेण सुवर्णपात्रान्तरसंस्थितेन॥ प्रदीप्तवासा सह सङ्गतेन नीराजनं ते जगदीश कुर्वे॥ मंगलं भगवान् विष्णुर्मंगलं गरुडध्वजः। मंगलं पुण्डरीकाक्षो मंगलायतनं हरिः। सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके॥ शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते। मंगलं भगवान् देव मंगलं मूषकध्वज। मंगलं पार्वतीपुत्र मंगलं कुरु सर्वदा॥ ॐभूर्भुवःस्वः सिद्धिबुद्धिसहितमहागणपतये नमः निराजनं समर्पयामि॥ जलेन प्रदक्षिणां कुर्यात्॥ पुष्पैर्देवाभिवंदनम्॥ हस्तेन आत्मवन्दनम्॥ हस्तप्रक्षालनम्॥

प्रदक्षिणाः—सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम्॥ १५/१५॥

यानि कानि च पापानि जन्मान्तरकृतानि च॥ तानि तानि विनश्यन्तु प्रदक्षिणपदेपदे॥

---

१ विशेष आरती करवामाटे चोथी १ प्राकृत आरतीओ पृष्ठ (१५.१) पर छे ते लेवी.

ततो मन्त्रपुष्पाञ्जलिः ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥ ते ह नाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६/३१ ॥ ॐ राजाधिराजाय प्रसह्यसाहिने ॥ नमो वयं वैश्रवणाय कुर्महे । स मे कामान्कामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय महाराजाय नमः ॥ ॐ स्वस्ति । साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुषऽआन्तादापरार्धात् पृथिव्यै समुद्रपर्यन्ताया ऽएकराडिति । तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आविक्षितस्य काममेर्विश्वेदेवाः सभासद इति । ॐ विश्वतश्चक्षुरुत विश्वतो-मुखो विश्वतोबाहुरुत विश्वतस्पात् ॥ सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ १७/१९ ॥

विनायकेशपुत्र त्वं गणराज सुरोत्तम ॥ देहि मे सकलान्कामान् वंदे सिद्धिविनायक ॥ ॐ भूर्भुवः स्वः सि० बु० सहित-महागणपतये० मंत्रपुष्पांजलिं समर्पयामि ॥

छत्रम्—ॐ अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्म्मणः समवर्त्तताग्रे ॥ तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ ३१/१७ ॥

गणाधिप नमस्तुभ्यं सर्वसिद्धिप्रदायकम् ॥ अपां तमो विनाशाय छत्रं ते प्रतिगृह्यताम् ॥ ॐ भू० सि० बु० स० म० गणपतये नमः छत्रं स० ॥

चामरम्—वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः

पुरस्त्तात् ॥ तमेव विदित्वाति मृत्युमेति नान्य? पन्था विद्यतेऽयनाय ॥२$\frac{१८}{३१}$॥

नमस्ते देवदेवेश सर्वमंगलदायक। चामरन्ते प्रदास्यामि गृहाण परमेश्वर ॥ ॐ भू० सि०बु० स० महाग० चामरं समर्पयामि ॥

द्वितीयं चामरम्—प्रजापतिश्चरति गर्भेऽअन्तरजायमानो वहुधा विजायते ॥ तस्ययोनिम्परिपश्यन्ति धीरास्तस्मिन्हतस्थुर्भुवनानिविश्वा ॥ ३$\frac{१९}{३१}$ ॥

उमागर्भसमुद्भूत धर्मकार्यप्रसाधक ॥ चामराभ्यां वीजयामि प्रसादः क्रियतां प्रभो ॥ ॐ भू० सि० बु० स० म० गणपतये० द्वितीयचामरं स० ॥

आदर्शः—यो देवेभ्यऽ आतपति यो देवानाम्पुरोहितः ॥ पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ ४$\frac{२०}{३१}$ ॥

भालचन्द्राय देवाय सर्वसिद्धिप्रदायक ॥ आदर्शोऽयं मया दत्तो गृहाण परमेश्वर ॥ ॐ भू० सि० बु० स० महाग० आदर्शं दर्शयामि ॥

तालवंदनम्—रुचम्ब्राह्मञ्जनयन्तो देवाऽअग्रे तदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवाऽ असन्वशे ॥ ५$\frac{२१}{३१}$ ॥

गणाधिप नमस्तेऽस्तु सर्वविद्याप्रसाधक ॥ सर्वविघ्नविनाशाय गृह्यतां तालवंदनम् ॥ ॐ भू० सि० बु० सहितमहाग० तालत्रयकरणं स० ॥

स्तुतिपाठः—श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽ इषाण सर्वलोकम्मऽ इषाण ॥ ६$\frac{२२}{३१}$ ॥

विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ॥ नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय सुखदाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे । भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय ॥ निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ॐ भूर्भुवः स्वः सि० बु० स० *महागणपतये नमः प्रार्थनापूर्वकनमस्कारान् स० ॥*

विशेषार्घः ॥ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तानामभयंकर्ता त्राता भव भवार्णवात् ॥ द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो । वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद । अनेन फलदानेन फलदोऽस्तु सदा मम ॥ ॐ भूर्भुवः स्वः सि० बु० स० महा० विशेषार्घं संपादयामि । अर्घान्ते आचमनीयं स० ॥

क्षमापनम् ॥ त्वां विघ्नशत्रुदलनेति च सुंदरेति भक्तप्रियेति सुखदेति वरप्रदेति ॥ विद्याप्रदेत्यघहरेति च ये स्तुवंति तेभ्यो गणेश वरदो भव नित्यमेव ॥ त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव । त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात् ॥ करोमि यद्यत्सकलं परस्मै गजाननायेति समर्पयामि ॥ भावहीनं भक्तिहीनं मन्त्रहीनं सुरेश्वर । तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥ अज्ञानाद् विस्मृतेर्भ्रान्त्या

यन्न्यूनमधिकं कृतम् ॥ तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥ मत्समो नैव पापिष्ठस्त्वत्समो नैव पापहा । हे गजानन हे देव यथायोग्यं तथा कुरु ॥ॐ भू०सि०बु०स०म०गण०क्षमापनं स०॥ यथाशक्ति मूलमंत्रजपं कुर्यात् ॥ मूलमंत्रः-ॐ गं गणपतये नमः॥

अनेन यथाशक्ति जपाख्येन कर्मणा भगवान् सि०बु० स० म० गणपतिः प्रीयताम् ॥

अनेन यथाशक्ति यथा मिलितोपचारैः पूजनेन सिद्धिबुद्धि-सहितमहागणपतिः प्रीयतां नमम ॥ ॐ तत्सत् ब्रह्मार्पणमस्तु ॥ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विना-वधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति श्रीगणेशपूजनं समाप्तम् ॥

## ॥ श्रीगणेशस्तुतिः ॥

॥ ललितछंदः ॥

वंदनं विभुं श्रीगजाननं सिंहवाहनं पापनाशनम् ॥
भवभयापहं मुक्तिदायकं दुष्टनाशनं श्रीगजाननम् ॥ १ ॥
शूर्पकर्णकं निम्ननाभिकं स्वप्रकाशकं सिंदुरप्रियम् ॥
अमरवंदनं पाशधारकं मोदकप्रियं श्रीगजाननम् ॥ २ ॥
मयूरवाहनं द्विरदाननं शशिधरप्रभुं वरप्रदायकम् ॥
एकदंतिनं मूषकवाहनं नागभूषणं श्रीगजाननम् ॥ ३ ॥
किरीटधारिणं पद्मपंकजं मुनिसुसेवितं पादपङ्कजम् ॥
कमलनेत्रकं लंबनासिकं कम्बुकंठकं श्रीगजाननम् ॥ ४ ॥
नूपुरकंकणं सामगप्रियं लंबउदरं भालशोभितम् ॥
चारुचंदनं भक्तिदायकं मोक्षदायकं श्रीगजाननम् ॥ ५ ॥
मदनकार्मुकं गंडशोभितं सर्वभूषणं सर्ववंदितम् ॥
भक्तपालकं ऋणविमोचनं गणादिसेवितं श्रीगजाननम् ॥ ६ ॥

कामपूरकं भोगदायकं श्रीपदाम्बुजं श्रेयकारकम् ॥
सिद्धिसेवितं बुद्धिनायकं कामपूरकं श्रीगजाननम् ॥ ७ ॥
पद्मलोचनं लक्ष्मीनायकं गरुडवाहनं श्रीवत्सलाञ्छनम् ॥
मुकुटशोभितं श्रीमुदान्वितं विष्णुरूपिणं श्रीगजाननम् ॥ ८ ॥
त्रिशूलधारिणं भस्मलेपनं पार्वतीप्रियं व्याघ्रअंबरम् ॥
तपसःप्रियं नंदिसेवितं शिवस्वरूपिणं श्रीगजाननम् ॥ ९ ॥
एकचक्रकं शोभितंरथं दीपप्रकाशकं सप्तअश्वकम् ॥
अरुणसार्थिनं तेजरूपिणं दिवाकरविभुं श्रीगजाननम् ॥ १० ॥
त्रिगुणमाश्रितं मातृभावजं शक्तिपालनं खड्गधारिणम् ॥
जगत्पालनं अरिविदारणं शक्तिरूपिणं श्रीगजाननम् ॥ ११ ॥
अभेदरूपकं ॐप्रकाशकं मायिनां वरं ह्यत्रिगुणकम् ॥
मनुसुसेवितं भ्रमनिवारणं ज्ञानदायकं श्रीगजाननम् ॥ १२ ॥

## ॥ प्राकृत आरतीओ ॥

(१)

સુખકર્તા દુઃખહર્તા વાર્તા વિઘ્નાચી ॥ તુરવી પુરવી પ્રેમ કૃપા જયાચી ॥ સર્વાંગી સુંદર ઊટિ શેંદુરાચી । કંઠી ઝળકે માળ મુકતા ફળાંચી॥જય દેવ જય દેવ જય મંગલમૂર્તિ દર્શન માત્રેં મનકામના પુરતી ॥ ધ્રુ૦ ॥ ૧ ॥ રત્નખચિત ફરા તુજ ગૌરીકુમરા । ચંદનાચી ઊટિ કુંમકુમ કેશરા ॥ હિરે જડિત મુગુટ શોભતો બરા ॥ રુણઝુણતી નૂપુરેં ચરણી ઘાગરિયા ॥ જય૦ ॥ ૨ ॥ લંબોદર પીતાંબર ફણિવર બંધના । સરળ સોંડ વક્રતુંડ ત્રિનયના । દાસ રામાચા વાર પાહુ સદના । સંકષ્ટી પાવાવેં નિર્વાણીં રક્ષાવેં સુરવર વંદના ॥જય૦ ॥ ૩॥

(૨)

શેંદુર લાલ ચઢાયો અચ્છા ગજમુખકો ॥ દોંદિલ લાલ બિરાજે સુત ગૌરીહરકો ॥ હાથ લિયે ગુડ લડ્ડૂ સાંઈ સુરવરકો ॥ મહિમા કહે ન જાય લાગત હું પદકો ॥ ૧ ॥ તુમહો જી ગણરાજ વિદ્યાસુખ-દાતા ॥ ધન્ય તુમારા દર્શન મેરા મન રમતા ॥ જય દેવ જય દેવા ધ્રુ૦॥ અષ્ટો સિદ્ધિ દાસી સંકટકો બૈરી ॥ બિઘનબિનાશન મંગલમૂરત અધિકારી । કોટી સૂરજ પ્રકાશ ઐસી છબ તેરી ॥ ગંડસ્થલ મદ

મસ્તક ઝૂસે શશિબિહારી ॥ જય૦ ॥ ૨ ॥ ભાવ ભગતસેં કોઈ શરણાગત આવે ॥ સંતત સંપત સબહી ભરપૂર પાવે ॥ ઐસે તુમ મહારાજ મોકોં અતિભાવે ॥ ગોંસાવી ગુણનંદન નિશદિન ગુણ ગાવે ॥ જય૦ ॥ ૩ ॥

(૩)

આરતિ શ્રી ગણેશની કીજે આરતિ શ્રી ગણેશની કીજે તન મન ધનને અરપણ કીજે ॥ પ્ર૦ ॥

પ્રથમાવતાર મહોત્કટરૂપે, કશ્યપઘેર પ્રગટ્યા નિજ રૂપે;
કાશીરાજની વિનતિ સ્વીકારી,કાશી ગયા અતિ ઉલટ ભારી.
બાલકરૂપે દુષ્ટોને હણવા, ભક્તોના કારજ પૂરણ કરવા.
અભિમાનીનું માન ઉતાર્યું, બ્રાહ્મણ શુકલનું દુઃખ નિવાર્યું;
દશભુજાને કેશરીવાહન, દુઃખનિવારણ ભયભયભંજન.
આરતિ૦ ૧.

ત્રેતાયુગે મયૂરેશ્વરરૂપે, શીવપાર્વતીનાં મન અતિશોભે;
બાળકરૂપે લીલા કીધી, ભક્તોની ઇચ્છા પૂરણ કીધી.
ષટ્ભુજા ને મયૂરવાહન, અધર્મનું કાઢ્યું નિકંદન;
ગોબ્રાહ્મણનું પાલન કીધું, ત્રેતા યુગનું કારજ કીધું.
આરતિ૦૨.

દ્વાપરયુગમાં ગજાનન પ્રગટ્યા,શંકર ભવાનીના મનોરથ ફળીયા;
ચારભુજા ને મૂષકવાહન, લંબોદર અતિ પતિતપાવન.
રાજા વરેણ્યને ઉપદેશ આપી, ભક્તિ ભાવથી મુક્તિ આપી;
વ્યાસ શૌનકની અમૃતવાણી, ભાવે ભજીએ ઉલટ આણી.
આરતિ૦૩.

કલિયુગના એ અંતસમયમાં, અધર્મનાશ કરીને જગમાં;
અશ્વનું વાહન બેભુજધારી, ધૂમ્રકેતુનું નામ સ્વીકારી.
એવા ગણેશની ૐકારરૂપે, સેવા કરજો અભેદ સ્વરૂપે;
બ્રહ્માદિક ઇન્દ્રાદિક દેવા, સૂત, શૌનક ને પરાશર જેવા,
નિત્ય કરે છે એની સેવા, "મનુ" પરમપદ ભક્તિ લેવા;
પતિતપાવન પરમ ઉદ્ધારણ, સેવક લેજો તમારે શરણ.
આરતિ૦૪.

———